सचित्रम्

# संस्कृत-पाठ्य-पुस्तकम्

व्याकरणनियमोपेतम्

षष्ठश्रेणिछात्रोपयोगि

## प्रथमो भागः

---

प्रकाशक
रामनारायण लाल
प्रकाशक तथा पुस्तक-विक्रेता
इलाहाबाद

# संस्कृत-पाठ्य-पुस्तकम्

## व्याकरणोपेतम्

( सचित्रम् )

षष्ठश्रेणिछात्रोपयोगी

### प्रथमो भागः

---

प्रकाशक

**रामनारायण लाल**

पब्लिशर और बुकसेलर

इलाहाबाद

---

१९५६

श्रीः

# समर्पणम्

तत्रभवतामिङ्गलिशस्कूलीयसंस्कृताध्यापकानां करकमलेषु पुस्तकमिदं सादरं समर्प्यते । यतोऽस्य पुस्तकस्य साफल्यं भवतामेवाधीनम् ।

नवीनरीत्या लिखितमेतत् । यद्यपि परम्परागता शिक्षणशैली अतीवोपयोगिनी सुशोभना च, तथापि सा तस्यैव विद्यार्थिनः कृतेऽस्ति यः केवलमेकमात्रस्य संस्कृतस्यैव पठने निरतोऽस्ति । किन्त्वाधुनिकस्कूलविद्यार्थिनामितराण्यपि शतशः कार्याणि कर्तव्यानि भवन्तीति वयमिदं प्रारंभिकपुस्तकं यथाशक्ति सरलं-मनोहरं च जीवितभाषया कृतवन्तः स्मः ।

बालको यथा माता पित्रादिलोकमुखाच्छ्रावं श्रावं हिन्दी भाषायाः सहस्रशः शब्दान् शिक्षते, तच्छब्दसमुदायद्वारैव स्वकीयं मनोभावं प्रकटयितुं समर्थो भवति, किन्तु तदानीं तेन हिन्दीव्याकरणस्य नामापि न श्रुतं भवति; हिन्दीशब्दानांसाधुत्वमसाधुत्वं वेत्यजानन्नपि ततः पूर्वमेव स स्वमातृभाषया हिन्द्या भाषणं पठनं लिखनं चाशिक्षत । अनन्तरमसावभ्यासद्वारा साक्षरसंभाषणश्रवणात्, पुस्तकावलोकनात्, स्वाशुद्धीः सुधारितवान् । तथैव भवन्तः संस्कृताम्भाषां पाठयेयुरिति वयमाशास्महे ।

यदि व्याकरणस्यावश्यकता कुत्रापि ज्ञायेत, तर्हि तज्ज्ञानं भवन्तः सुसमीचीनतया सरलया व्याख्यया तामावश्यकतां

पूरयितुमर्हन्ति । अत्र तु व्याकरणं संस्कृतभाषाज्ञानोपार्जनस्य साधनमात्रमेवापेक्ष्यते, न तु शुष्कव्याकरणायैव ।

व्याकरणसम्बन्धिनो ये विषयाः पुस्तकान्ते लिखितास्ते तु सम्यक् पाठनीयाः ।

कस्यापि विषयस्य यदा भवन्तः व्याख्यां कुर्वीरन्, तदा संस्कृत-भाषयैव भवद्भिर्नहि भाषान्तरेण कर्तव्या । एवमनुष्ठिते भवच्छिष्याः क्रमशः सर्वां भवदुक्तिमवगन्तुं समर्था भविष्यन्ति । अनया रीत्या तेषां शब्दकोषः प्रसारम्प्राप्स्यति ।

पाठानामन्ते ये प्रश्ना लिखिताः सन्ति ते तूदाहरणार्थाः । तादृशा अन्येऽपि प्रश्नाः स्वबुद्धिकल्पिता भवद्भिरपि रचनीयाः। तेषामुत्तराणि संस्कृतभाषायामेव शिष्यैर्देयानि । प्रत्येकश्छात्रः स्वकीयान्युत्तराणि दातुम्प्रोत्साहयितव्यः । तेषु केचित्प्रश्ना लेखनीयास्तेषामुत्तराणि च लेखनीयानि यतो लेखनेऽपि बालानामभ्यासो भवेत् । यदा विद्यार्थिनोऽशुद्धीः कुर्वन्ति तदैव तासां कारणं संशोधनं च देयं, विद्यार्थिभिश्च संशुद्धरूपमुच्चरितव्यम् । पूर्वाभ्यस्ताः प्रश्ना नियतपरीक्षायां कदापि न प्रष्टव्याः, अन्यथा परीक्षावैफल्यं स्यात् किं बहुना विज्ञेषु ।

---

# विषय-सूची

## प्रथमः पाठः

| | |
|---|---|
| वद् | वदामि । |
| पठ | पठामि । |
| लिख | लिखामि । |
| चल | चलामि । |
| तिष्ठ | तिष्ठामि । |

| | |
|---|---|
| वचनं वद् | वचनं वदामि । |
| पुस्तकं पठ | पुस्तकं पठामि । |
| पत्रं लिख | पत्रं लिखामि । |
| गृहं चल | गृहञ्चलामि । |
| अत्र तिष्ठ | अत्र तिष्ठामि । |

———




संख्यावाचकानि चित्राणि

द्वितीयः पाठः

गणनां जानासि ? जानामि ।

गणय, गणयामि, शृणु ।

एकं, द्वे, त्रीणि, चत्वारि, पञ्च, षट्,

सप्त, अष्ट, नव, दश ।

इदं किम् ? इदम् एकम् फलम् ।

इमे के ? इमे द्वे नेत्रे ।

इमानि कानि ? इमानि त्रीणि पुस्तकानि ।

इमानि कानि ? इमानि चत्वारि पुष्पाणि ।

इमानि कानि ? इमानि पञ्च पत्राणि ।

इमे के ? इमे षट् पुरुषाः ।

इमे के ? इमे सप्त बालकाः ।

इमाः काः ? इमाः अष्ट स्त्रिया ।

इमाः काः ? इमाः नव बालिकाः ।

इमानि कानि ? इमानि दश आम्राणि ।

टिप्पणी—अध्यापकश्छात्रान् शिक्षयेद्यत्संस्कृतभाषायां त्रीणि लिङ्गानि भवन्ति । ईदृगान् प्रश्नान् पृच्छेत्, येषामुत्तरवाक्येषु त्रयाणामपि लिङ्गानां रूपाणि प्रयुक्तानि भवेयुः ।

---

तृतीयः पाठः

| | |
|---|---|
| इदं किम् ? | पुस्तकम् इदम् । |
| इयं का ? | इयं लेखनी । |
| अयं कः ? | अयं पट्टः । |
| पुस्तकम् आनय | पुस्तकम् आनयामि । |
| पत्रं पठ | पत्रं पठामि । |
| विरम | विरमामि । |
| पत्रं गृहाण | पत्रं गृह्णामि । |
| लेखनीं नय | लेखनीं नयामि । |
| पट्टम् पश्य | पट्टं पश्यामि । |

टिप्पणी—प्रष्टव्या ईदृशाः प्रश्नाः येषु त्रयाणामपि लिङ्गानां द्वितीया-विभक्तेरेकवचनं प्रयुक्तम्भवेत् ।

---

चतुर्थः पाठः

| | |
|---|---|
| किमिदम् ? | मस्तकमिदम् । |
| कौ इमौ ? | हस्तौ इमौ । |
| के इमे ? | केशा इमे । |
| के इमे ? | दन्ता इमे । |




शरीरम् ।

के इमे ?　　　　इमे जानुनी।
के इमे ?　　　　लोचने इमे।

लोचने उन्मीलय। हस्तौ प्रक्षालय। दन्तान् मार्जय। मुखं धावस्व। केशान् प्रसाधय। भानुं पश्य प्रणाम च। उपवनं गच्छ। पुष्पाणि गृहाण। गन्धं जिघ्र। फलमास्वादय। स्वच्छं जलं पिब। पाठं शृणु।

टिप्पणी—अध्यापकश्चित्रस्थे शरीरेऽङ्गानां नामानि स्वच्छात्रान् पृच्छेद् बोधयेच्च।

अध्यापकश्छात्रान् शिक्षयेद् यत् संस्कृतभाषायां त्रीणि वचनानि भवन्ति। तत्र प्रथमद्वितीययोर्विभक्त्योर्द्विवचने रूपाणि समानानि एव।

ईदृशान् प्रश्नान् पृच्छेद् येषु संज्ञायाः सर्वनाम्नश्च द्विवचनम्प्रयुक्तम्भवेत् न तु क्रियायाः।

---

पञ्चमः पाठः

किमिदम्? चक्षुरिदं, मुखमिदम्, श्रोत्रमिदम्। इयं का? इयं नासिका, इयं जिह्वा, इयं हनुः। इमौ कौ? इमौ चरणौ, इमौ बाहू।

शिरसा नम　　　　शिरसा नमामि।
नासिकया जिघ्र　　नासिकया जिघ्रामि।

| | |
|---|---|
| मुखेन खाद | मुखेन खादामि । |
| दन्तैश्चर्वय | दन्तैश्चर्वयामि । |
| जिह्वया स्वादय | जिह्वया स्वादयामि । |
| गलेन निगिल | गलेन निगिलामि । |
| हस्ताभ्यां गृहाण | हस्ताभ्यां गृह्णामि । |
| पद्भ्यां चल | पद्भ्यां चलामि । |

टिप्पणी—अध्यापक एवंभूतान् प्रश्नान् पृच्छेद्येषामुत्तरवाक्येषु तृतीया-विभक्तेः त्रयाणामपि वचनानां रूपाणि त्रिष्वपि लिङ्गेषु प्रयुक्तानि भवेयुः ।

---

षष्ठः पाठः

## छात्रयोः संलापः

प्रथमश्छात्रः—कस्त्वम् ?

द्वितीयश्छात्रः—अहम् छात्रः ।

प्र०—किन्नामासि ?

द्वि०—देवदत्तनामाहम् ।

प्र०—किम्पठसि ?

द्वि०—संस्कृतभाषाम् पठामि ।

प्र०—कुत्र गच्छसि ?

द्वि०—पाठशालां गच्छामि ।

पुनर्द्वितीयः—भवान् कः ?

प्र०—अहमपि विद्यार्थी ।

द्वितीयः— क्व ते गृहम् ?

प्र०—धर्मपुरे ।

द्वि०—कस्मै प्रयोजनायात्रागतः ?

प्र०—पठनाय ।

द्वि०—किं किं पठितम् भवता ?

प्र०—हिन्दी, गणितं, इतिहासं, भूगोलं च पठित-वानस्मि ।

द्वि०—पुनरिदानीं किं पठिष्यति भवान् ?

प्र०—आङ्ग्लभाषाम् ।

द्वि०—कुत्र पठिष्यसि ?

प्र०—अत्रत्यहाईस्कूले पठिष्यामि ।

द्वि०—कुत्र स्थास्यसि ?

प्र०—छात्रालये स्थास्यामि ।

द्वि०—स मुख्याध्यापकस्याधिकारेऽस्ति । तेन मिलितव्यम् ।

प्र०—वरं सखे मिलिष्यामि ।

द्वि०—मित्र ! त्वमपि गच्छ, अहमपि गच्छामि यतोऽतिकालो जातः, अतिवर्तते च पठनवेला ।

टिप्पणी—अध्यापकः सर्वासां विभक्तीनामेकवचनरूपाणि शिक्षयेत् । तत एवंभूतान् प्रश्नान् पृच्छेद्यच्चतुर्थ्यादि-विभक्तीनामेकवचनरूपाणि उत्तरवाक्येषु प्रयुक्तानि भवेयुः ।

सप्तमः पाठः

## व्यायामः

गुरुः—भो भो छात्राः व्यायामोऽपि कर्तव्यः ।

छात्राः—व्यायामात् को लाभो भवति ?

गुरुः—आयुरारोग्यं वर्द्धते ।

छात्राः—तर्हि कथं क्रियते व्यायामः ?

गुरुः—तस्यानेके प्रकाराः सन्ति ।

छात्राः—के ते प्रकाराः ?

गुरुः—धावनं, खेलनं च ।

छात्राः—कदा कथं वा धावनं लाभप्रदं भवति ?

गुरुः—( १ ) प्रातः सायं च धावनं विशेषोपकारि भवति । भोजनानन्तरं कदापि न धावेत् यतस्तद् धावनं रोगं करोति ।

( २ ) समस्थले प्रथमं शनैः शनैः किञ्चि

"अः" से परे यदि "अ", वर्गों का तृतीय, चतुर्थ, पञ्चम अ अथवा य, र, ल, व, ह, में से कोई वर्ण हो तो "अः" को "ओ" हो जाता है, जैसे—व्यायामः+अपि=व्यायामो अपि=व्यायामोऽपि कः+लाभः=को लाभः । लाभः+भवति=लाभो भवति ।

दूरं धावेत्, ततो धावनगतिं क्रमशो वर्धयेत्, अनन्तरमेवंवेगेन धावेत् यथा श्रान्तो भवेत्।

छात्राः–खेलनं कदा कर्तव्यम्?

गुरुः–अध्ययनानन्तरं यदा सुसमये मित्राणि मिलेयुः तदैव यूयं कन्दुकादिभिः खेलेत। एतेन युष्माकं मनोविनोदः, शरीरपुष्टिः, पठनश्रमशान्तिश्च भवेत्।

व्यायामपुष्टगात्रस्य बुद्धिस्तेजो यशो बलम्।
प्रवर्धन्ते मनुष्यस्य तस्माद् व्यायाममाचरेत्॥

उदाहरणार्थाः प्रश्नाः—

अत्र देशे के व्यायामाः प्रचलिताः?

कोऽस्ति प्रत्येकस्य प्रयोगः?

---

अष्टमः पाठः

## आम्रवृक्षः

किमिदम् ? अयं वृक्षः । कोनाम वृक्षोऽयम् आम्रवृक्षोऽयम् । किं त्वया आम्रफलमास्वादितम् एवम् । तानि तु स्वादूनि भवन्ति । आम्रे कठि बीजं भवति । यदा वयं तद् बीजं वपामस्तत एक लघुरङ्कुरः प्ररोहति । स एव कालेन महान् वृक्ष जायते । महतस्तस्य सुवृक्षस्य शीतलच्छायामाश्रयन जनाः । आम्रो वसन्ते फुल्लति धारयति च नवा पल्लवानि । तदैव तत्र मनोहरः पिक आगत्य मधु कूजति चूषति च रसालमञ्जरीम् । अन्येऽपि पक्षिण स्तदा तत्र कलरवं कुर्वन्ति । ततः स वृक्षः फलति

सेवितव्यो महावृक्षः फलच्छायासमन्वितः
यदि दैवात् फलं नास्ति छाया केन निवार्यते

टि०—विशेष्यविशेषणयोर्लिङ्गं वचनं विभक्तिश्च एकमेव भव त्यध्यापकश्छात्रान् बोधयेत् । ततश्छात्रैर्विशेषणपदानि पृथक् कारयेत्

यदि अकार से परे विसर्ग हो, और विसर्ग से परे अकार को छो कर कोई और स्वर हो तो विसर्ग का लोप हो जाता है, जैसे—त एकः = तत एकः हो गया और फिर स्वरसन्धि नहीं होती ।



आम्रवृक्षः ।

नवमः पाठः

## सुसन्ततिः

आसीद् ब्रह्मस्थलं नाम पुरं, तत्र बहवो विद्वांसो ब्राह्मणा अवसन् । तेषामाश्रये काचिद् दीन विधवा ब्राह्मण्यभवत् । तस्या मातृभक्ताः सौम्याश्च पञ्च पुत्राः आसन् । पञ्चापि हरिदत्तशर्मण उपाध्यायात् शास्त्राणि अपठन् । एकदा कोऽपि दयालुस्तपस्विनीं तां ब्राह्मणीं दृष्ट्वा दयमानोऽ पृच्छत् "ब्राह्मणि ! ते दारिद्र्यं विलोक्य मे हृद भृशं दूयते यत् सुचरित्रा भवती धनाभावेन कष्ट सहते" इति श्रुत्वा सा उत्तरमददात् । "भ स्वस्ति तेऽस्तु यत्त्वं दरिद्रायां मयि करुणायसे किन्तु भवान् यथा कथयति नास्मि तादृशी निर्धन यतो मेऽमूल्यानि पञ्चरत्नानि सन्ति ।" "अहह सत्यं ब्राह्मणि क्व ते तानि रत्नानि ?" इत्युक्त्वा तानि दर्शयेति प्रार्थयत । तावदेव गुरुगृहा

तस्याः पञ्चापि पुत्रा आगत्य मातुश्चरणाववन्दन्त। अब्रवीच्च सा "साधो ! पश्य पञ्चापि मम रत्नानि।" ततस्तानवलोक्य सोऽतुष्यत् । निःसन्देहं सुसन्ततिः सर्वरत्नेभ्य उत्तमा ।

वरमेको गुणी पुत्रः न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणा अपि ॥

टि०—अध्यापकश्छात्रान् लङ्लकाररूपाणि शिक्षयेत् प्रश्नांश्चैवं-भूतान् कुर्यात् येषामुत्तरवाक्येषु लङ् लकारस्यैव क्रिया प्रयुक्ता भवेत्।

---

दशमः पाठ

## कुम्भकारः

कुम्भकारो भूमौ तिष्ठति, स दण्डेन चक्रं भ्रामयति अतस्तद् भ्रमति । तस्य पार्श्वे मृद्राशिस्तिष्ठति । स हस्ताभ्यां मृदमादाय चक्रे धरति । तया मृत्तिकया घटशरावादीनि भाण्डानि रचयति । ततः सूत्रेण छित्वा भ्रमतश्चक्रादवतारयति । तानि घर्मे

शोषयति। शुष्काणि च तानि पवने स्थापयति। पर्याप्तमिन्धनं च ददाति। तत्राग्निं प्रक्षिपति। ततः पवनस्योर्ध्वभागम्पङ्केन लिम्पति। ततोऽग्नितापेन तानि भाण्डानि पक्कतां यान्ति। ग्रीष्मे मृद्घटे जलं शीतलं जायते। केचन कुलालाः क्रीडनकान्यपि निर्मान्ति। लक्ष्मणपुरे तानि शोभनानि भवन्ति।

यथा मृत्पिण्डतः कर्त्ता कुरुते यद्यदिच्छति।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते॥

टि०—अध्यापकश्छात्रान् एतादृशान् प्रश्नान् पृच्छेत्—
१—कस्य वस्तुनः कुम्भकारो भाण्डानि रचयति ?
२—केन साधनेन ?
३—स कस्मै प्रयोजनाय पवने भाण्डानि स्थापयति ?
४—सुक्रीडनकानि कुत्र निर्मीयन्ते ?
पुनरध्यापकः कुलालं, चक्रं, दण्डं, घटादिकं च दर्शयित्वा बालकान् बोधयेत् एतत्सम्बन्धे अन्यानपि प्रश्नान् पृच्छेत्।

---

## एकादशः पाठः

## सिंहः

भारतवर्षेऽपि क्वचित् क्वचित् सिंहा उपलभ्यन्ते। साम्प्रतमपि काठियावाड़देशे यत्र-तत्र कान्तारेषु सिंहाः सन्ति। ते मृगान् व्यापाद्य भक्षयन्ति। रात्रावेव चाखेटं ते कुर्वते। अन्येपि पशवो बलीयांसो❀भवन्ति, किन्तु सर्वेषां चतुष्पदानां मध्ये सिंहो बलिष्ठः❀। अतः मृगेन्द्र इत्युच्यते। कदापि युष्माभिः सिंहनादः श्रुतः? नहि श्रुतः! गजादिजन्तुनादोऽपि गम्भीरतमो❀भवति, किन्तु सिंहनादः सर्वप्राणिनादेषु गम्भीरतमो❀भवति। सिंहस्य स्कन्धदेशे केसरा भवन्ति, अतः स "केसरी" इत्युच्यते। केचन पुरुषाः केसरिणं प्रलोभ्य पञ्जरे पालयन्ति। लोकश्च तत्र कौतुकावलोकनाय गच्छति।

---

† औ से परे कोई स्वर हो तो "औ" के स्थान में आव् हो जाता है। जैसे रात्रौ+एव=रात्रावेव।

❀अतिशायनविषयं बोधयेत्।

सिंहो मार्जारस्य सजातीयः, अतस्तादृशा एव तस्य गुप्ता नखाः, पिंगले च नेत्रे ।

नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः ।
विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ॥

टि०—अध्यापकः परस्मैपदात्मनेपदयोर्विवरणं कृत्वा छात्रान् सम्यग बोधयेत् । इदमपि च शिक्षयेत यत् कर्मवाच्यक्रियाया नित्यमात्मनेपदं भवति ।

द्वादशः पाठः

## पिपीलिका

पिपीलिकां पश्यत। सर्वं दिनं सा परिश्रमं कुर्वती तिष्ठति। आलस्याभिभूता न भवति। ग्रीष्मर्तावन्नं सञ्चिनोति यतः प्रावृषि शरदि च सुखेनास्ते। वर्षारम्भेऽसौ स्वाराडानि नीत्वा क्वचिदुच्चस्थाने निवेशयति। युष्माभिः कदापि कीटं कर्षन्ती पिपीलिका दृष्टा भवेत्। कतिधा सा मुहुः पततः कीटस्य आकर्षणाय यतते। अन्ततो गत्वा तस्याः श्रमः सफलो भवति। यूयमपि तथैव सत्यपि विघ्ने स्वाध्यायं मास्म त्यजत, अन्तेऽवश्यं सफलमनोरथा भविष्यथ।

गच्छन् पिपीलिको याति योजनानां शतान्यपि ॥
अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ॥

अध्यापकश्छात्रान् शतृप्रत्ययान्तशब्दरूपाणि बोधयेत्।

---

त्रयोदशः पाठः

## कृषीवलः

कृषीवलः प्रातःकाले जागर्ति। बलीवर्दयोः स्कन्धे युगं निदधाति, कीलेन कलीति, ततो हलमादाय क्षेत्रं गच्छति तत्र नद्ध्वा हलदण्डं युगे बध्नाति। ततः वृषभौ चालयन् फालमुखेन हलेन क्षेत्रं कर्षति। स सदैव कार्यनिरतो भवति। किन्तु चातुर्मास्ये कृषको विशेषेण कृषिकर्मणि लग्नस्तिष्ठति। क्षेत्रं कृष्ट्वा स बीजानि वपते। बीजानि तानि क्षितौ मूलन्ति, प्ररोहन्ति च। अङ्कुरितं क्षेत्रं दृष्ट्वा कृषाणः प्रसन्नो जायते। यद्यनुकूलसमयः स्यात् तर्हि मासत्रयेण प्रायः शस्यानि पच्यन्ते। क्षेत्रपस्तानि लुनाति, लूनं मर्दयति, मर्दितं[1] पवते, पूतं राशीकुरुते। राशिं गृहमानयति, विक्रीणीते च सति[2] कार्ये। बुसं पशवः खादन्ति, अन्नेनैव सर्वमनुष्या जीवन्ति।

---

१—क्तप्रत्ययान्तो भूतेऽर्थे भवति।

२—सतीति सप्तमी—( सति कार्ये, काम पड़ने पर इति हिन्दी-भाषा )

धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् ।
निक्षिप्तं हि मुखे रत्नं न कुर्यात् प्राणधारणम् ॥

टि०—पाठान्तेऽध्यापकश्छात्रान् कथयेद्यदत्र चित्रे यूयम् यद् यत् पश्यथ तत्तत्स्वकीयशब्दैर्वर्णयत । विधिलिङ्लकारस्यार्थं च स्वशिष्यान् बोधयेत् ।

चतुर्दशः पाठः

## कूपः

अहो कीदृङ् मनोहरं दृश्यमस्य कूपस्य ! द्रष्टुमिदं को नेच्छेत् ? अयं महाकूपः प्रतीयते । एतस्योपरि घटमाकृष्टुमरघट्टकोऽपि लग्नो दृश्यते । तत्र जलमानेतुमागता नव स्त्रियो विद्यन्ते । एता नवापि कहार्यः प्रतिभान्ति । रज्ज्वा घटस्य कण्ठं बद्ध्वा अरघट्टके तां रज्जुमवस्थाप्य एका कूपाज्जलमुद्धरति । तस्याः संगिन्योऽन्यास्तिस्रस्तदन्तिके वर्तमानाः घटानां बन्धने मोचने च साहाय्यं कुर्वन्ति। दक्षिणतः कूपस्य पञ्च योषितोऽवलोक्यन्ते । ततो कूपाज्जलमुत्तोलयतः । द्वे च तयोः सहायतां दत्तः।

अपरा त्वेका सजलं घटमुत्थापयितुं यतते । वीनाहे घटश्रेणिर्दृश्यते । तत्रैकस्मिन् घटे छिद्रमजायत । तस्माज्जलं च्यवते ।

भारतवर्षे प्रायः एको द्वौ बहवो वा कूपाः प्रतिग्रामं भवन्ति । बहुधा कूपजलं शीतलं मिष्टं च भवति । क्वचित् क्वचित्क्षारमपि । मरुदेशे विरलाः कूपाः श्रूयन्ते । इह देशे तु धार्मिकाः धनिनो ग्रामेषु नगरेषु मार्गेषु च कूपिकाः कूपान् वापीश्च निर्मापयन्ति । निदाघकाले प्रपा अपि स्थापयन्ति तत्र पिपासिता जना जलं पिबन्ति । निपानेषु पशवश्चापि आचामन्ति । कूपेभ्यः कृषिसिंचनमपि संपद्यते येन कृषिर्बहुफला भवति ।

नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः ।
अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीतासि ॥

टि०—अध्यापकश्छात्रान् तुमर्थं च बोधयेत्, प्रश्नांश्चैतादृशान् पृच्छेद् येषामुत्तरवाक्येषु तुमन्ताः शब्दाः प्रयुक्ताः भवेयुः ।

---

पञ्चदशः पाठः

## सूर्यश्चन्द्रश्च

सूर्य एकोऽग्निगोलोऽस्ति । प्रकाशमुष्णताञ्च ददाति । यदि सूर्यो न भवेत् सर्वं वस्तु तमोभूतं शीतलं च स्यात् । बीजानि न प्ररोहेयुः सर्वश्च प्राणिवर्गः पृथिव्यां म्रियते । भास्करो भगवान् पृथ्वीतो बृहत्तरोऽस्ति, किन्तु लघुर्दृश्यते, यतः स त्रिंशल्लक्षाधिकनवकोटिं क्रोशार्धान् दूरेऽस्ति भूमेः ।

"रविराकाशे न भ्रमति प्रत्युत भूमिर्भ्रमति दर्शयति च भ्रमन्तमिव भानुम्" इति नव्यमतम् । भूगोलः पूर्वस्याः पश्चिमां प्रत्यहमेकवारं परिक्रामति, इति हेतोर्दिनं रात्रिश्च भवति । यदाऽस्माकं दिनं भवति तदा पृथिव्या अन्यपार्श्वे रात्रिः ।

चन्द्रमा रात्रौ प्रकाशते । तस्य प्रकाशः (ज्योत्स्ना) शीतलो भवति । स सूर्य इव दीप्तिमान् नास्ति । चन्द्रः स्वकीयप्रकाशेन न प्रकाशते । स स्वप्रकाशं

सूर्यत आदत्ते पृथिवीतश्चन्द्रो लघुतरोऽस्ति । स प्रतिमासमेकधा पृथिव्याः परिक्रमणं करोति।

खद्योतो द्योतते तावद् यावन्नोदयते शशी।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः।

प्रश्नाः—यदि कोऽपि विमानमारुह्य एकया घट्या पञ्चाशत कोशार्धानूर्ध्वं गच्छेत् तर्हि कतिभिर्वर्षैः सूर्यम्प्राप्नुयात् ?

---

षोडशः पाठः

## समयः

षष्ट्या पलैरेका घटी भवति। द्वाभ्यां घटिकाभ्यमेको मुहूर्तो ज्ञेयः। सार्धद्विघटिकाभ्यामेका घण्टा। चतुर्विंशत्या घण्टाभिः षष्ट्या घटीभिर्वा अहोरात्रं भवति। सप्तभिर्दिनैः सप्ताहो भवति। सप्ताहे—रविवारः, सोमवारः, मङ्गलवारः, बुधवारः, गुरुवारः, शुक्रवारः, शनिवारश्चेति सप्त दिनानि भवन्ति। चतुर्भिः सप्ताहैः प्रायः एको मासो ज्ञातव्यः। ते च—चैत्रः, वैशाखः, ज्येष्ठः, आषाढः, श्रावणः, भाद्रः,

आश्विनः, कार्तिकः, मार्गः, पौषः, माघः, फाल्गुन-श्चेति द्वादश मासाः भवन्ति । प्रतिमासं—शुक्लः कृष्णश्चेति द्वौ पक्षौ भवतः । द्वादशभिर्मासैरेकं वर्षं भवति । कदापि समयं वृथा न गमयेत्, यतो गतः समयः पुनर्न निवर्तते ।

मुहूर्तमपि जीवेत* नरः शुक्लेन कर्मणा ।
न कल्पमपि कष्टेन लोकद्वयविरोधिना ॥

प्रश्नाः—१—कतिभिः पलैरेका घटी भवति ?
२—वर्षे पञ्चमो मासः को नाम ?
३—सप्ताहे तृतीयं किन्नाम ?

इत्याद्यन्यानपि प्रश्नानध्यापको विद्यार्थिनः पृच्छेत् । विद्यार्थिनोपि संस्कृतभाषया उत्तरयेयुः ।

अध्यापको घटीयंत्रं स्वविद्यार्थिनो दर्शयेत् । समयसम्बधिनः प्रश्नान् पृच्छेच्च ।

---

*आत्मनेपदमार्षम् ।

सप्तदशः पाठः

## षड् ऋतवः

चैत्र-वैशाखौ वसन्तः। ज्येष्ठाषाढौ ग्रीष्मः। श्रावणभाद्रौ वर्षा। आश्विनकार्तिकौ शरत्। मार्गपौषो हेमन्तः। माघफाल्गुनौ शिशिरः।

वसन्ते तरवः फुल्लन्ति। ग्रीष्मे सूर्यः प्रचण्डो भवति, जलमुष्णं जायते, दिवसा वृद्धिं गच्छन्ति, निशाः क्षीणा भवन्ति पवनास्तप्ता वान्ति, क्षुद्र नद्यस्तडागाश्च शुष्यन्ति।

वर्षासु गर्जन्तो मेघा वारीणि वर्षन्ति। सूर्या चन्द्रमसौ बहुधा न दृश्यन्ते। खद्योताः प्रकाशन्ते। क्षेत्राणि शालिभिर्हरितानि भवन्ति। केकिनः प्रसन्नाः सन्तः केकारवं कुर्वन्ति।

शरदि मेघा जलहीना विशदाश्च भवन्ति। निर्मलं नभस्तलं श्यामलं दृश्यते। दिशः प्रसन्ना भवन्ति। सुखा वायवो वान्ति। तारागणो द्योतते। नद्यो

जलाशयाश्च सर्वे स्वच्छजला भवन्ति । शैत्यं मन्दं-मन्दं प्रसरति ।

हेमन्तशिशिरयोर्हिमं वर्धते । सूर्यस्तापेन हीनो भवति ।

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥

---

अष्टादशः पाठः

## गौः

यूयं गोष्ठ-चित्रं पश्यत। द्वे गावौ, द्वौ तर्णकौ, द्वौ च वत्सौ चित्रिताः सन्ति। गौरस्माकं मातेव पूज्यास्ति। यतस्तस्या दुग्धेन घृतेन च वयं जीवामः। तस्याः पुमपत्यैः कृषकाः कृषिं कुर्वते। कृषिफलेन लोको जीवति।

गौश्चतुष्पदा द्विशफा[1] च भवति। तस्या गलतले गलकम्बलो भवति, यः "सास्ना" कथ्यते। सा बुसं(षं) घासं च साभिलाषं भुङ्क्ते। खादनकालेऽल्प-चर्वितं खाद्यं निगिरति। अनन्तरं क्वचिदुपविशति, ततोरोमन्थायमाना[2] अर्धनिमीलिताक्षीसुखमास्ते। किन्तया क्रियते धेन्वा या न सूते न दुग्धदा। कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः॥

टिप्पणी —चित्रेऽस्मिन् कति गावः कियन्तो वत्साः कति च तर्णकाः सन्तीत्यध्यापको विद्यार्थिनः पृच्छेत्।

---

१ गाः, अजः, महिषः, शूकरः, गवयः, मृगः, अविः, उष्ट्रः, एते द्विशफाः।

२ अध्यापकः स्वविद्यार्थिभ्यः शानच् प्रत्ययस्य ज्ञानं दद्यात्।

ऊनविंशः पाठः

## अश्वः

अयमश्वः कीदृक् सुन्दरो जन्तुः। अस्यास्ति शोभनं शिरो, विशाले गोलाकारे च नेत्रे, लम्बायमानं मुखम्, उत्थितौ कर्णौ, तयोर्मध्ये सुशोभना शिखा, लम्बा च ग्रीवा, स्कन्धदेशे बालपंक्तिः या आलमिति कथ्यते, एकशफाः[1] चत्वारः पादाः, चामराकृति पुच्छं च।

घोटको बलीयान् भवति। अश्ववारा एतस्य पृष्ठमारोहन्ति। असौ गंत्री कर्षति क्वचिद्देशे हलमपि कृषति। संग्रामभूमौ महोपयोगी भवति। यतो दूरस्था अपि वैरिणोऽश्ववाराणां हस्तवर्तिन इव भवन्ति।

अश्वो भारमपि वहति। भारवाही पृष्ठ्यः कथ्यते। अस्यापि अशनं घासोऽस्ति एष गौरिव रोमन्थं न वर्तयति।

अश्वः शास्त्रं शस्त्रं वीणा वाणी नरश्च नारी च।
पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च॥

१ खरः, अश्वः, अश्वतरः, गौरः, शरभः, चमरी, एते एकशफाः।

त्रिंशः पाठः

## लौहः

लौह आकरान्निःसार्यते। मृत्तिकया प्रस्तरेण च मिलितो लभ्यते। लौहः तीक्ष्णाग्नितापं दत्वा स्वच्छीक्रियते। अयञ्च इंगलैण्डाख्ये देशे बाहुल्येन लभ्यते। हिन्दुस्थानेऽपि बर्दवान-उडीसा-कमाऊँ संज्ञकेषु प्रान्तेष्वस्य खन्यः सन्ति।

अस्माकं यावत् कार्यं लौहेन चलति तावत् केनाप्यपरेण धातुना न सिध्यति। लौहस्य लेखन्यः, सूच्यः, छुरिकाः, कुठाराः, खनित्राणि, लवित्राणि, अस्त्रशस्त्रादीनि चासंख्यानि साधनानि निर्मीयन्ते। किम्बहुना कृषकाणामनुत्तमं विना लौहं कार्यलवोऽपि नो चलति। कृषिरेव धन कुबेराणां रङ्कानां च जीवनमस्ति। यदि लौहो न स्यात् तर्हि लोको लोकोत्तरं कष्टमनुभवेत्, इति हेतोः सर्वधातुभ्यो लौहं श्रेष्ठं वदन्ति कृतिनः।

लौहकार ! घनैर्लौहं किं ताडयसि तापितम् ?
ईदृक्तीव्रासुखाग्राणामियमेव प्रतिक्रिया ॥

टि०—अध्यापकः एतादृशान् प्रश्नान् पृच्छेत्—

अस्मिन् स्थाने किं किं वस्तु लौहनिर्मितमस्ति कस्मै प्रयोगाय च ?

प्रश्नः—लौहः कुत्र लभ्यते ? तस्य कानि-कानि वस्तूनि क्रियन्ते ? तस्य कस्त्युपयोगिता ? इत्याद्यध्यापकश्छात्रान पृच्छेत् ।

---

एकविंशः पाठः

## प्रभातम्

अहो कीदृङ् मनोरमोऽयं प्रभातकालः । चन्द्रमाः पश्चिमायामस्तं गच्छन्नस्ति अरुणश्च पूर्वस्यामुद्गच्छन् वर्तते ।

पक्षिणो मधुरं गायन्ति गच्छन्ति चेतस्ततः आहारान्वेषणाय । प्रभातवायुरङ्गस्पर्शेन सुखयति लोकम् । कुक्कुटास्तारस्वरेण कूजन्ति ।

समयोऽयमुत्थानस्य । इति शय्यां त्यक्त्वोत्तिष्ठ ईश्वरं स्मर । शौचमुखमार्जनादि कर्म कृत्वा स्नानं

कुरु सन्ध्योपासनञ्च । बहिर्गच्छ । आरोग्यप्रदं प्रभातपवनं सेवस्व।

पश्य भगवान् भानुः प्राचीमुखमुद्भासयन्नुद्गच्छति, सर्वं च लोकं, स्वस्वकर्म करणाय प्रेरयति अहोरात्रे एष एवोत्तमः कालः । इयं सरस्वती वेला, अस्याम्बुद्धिस्स्वच्छा वर्त्तते । यत्पठ्यते तत् त्वरितं बुध्यते अभ्यस्यते च।

उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥

टि०—बालकाः, प्रभातकालं वर्णयत—इत्याज्ञां गुरुर्दद्यात् । तेषां कथनं च शृणुयात् ; कथनत्रुटिं च निरस्येत् ।

---

द्वाविंशः पाठः

## राष्ट्रपिता महात्मा गांधीः

गुर्जरप्रान्ते पोरबन्दराख्ये नगरे एकोनसप्तत्यधिकाष्टादशशततमे ईशवीयेऽब्दे अक्तूबरमासस्य द्वितीयायां तिथौ एकस्मिन् वणिक्कुले महात्मनोऽस्य जन्माभूत्। काबा गांधीरित्यस्य पितुः नाम। त्रयोदशे वर्षेऽस्य विवाहो बभूव।

"मैट्रिक्युलेशन" परीक्षामुत्तीर्य महानुभावोऽयमध्ययनाय आङ्ग्लदेशं जगाम। तत्र चत्वारि वर्षाण्यधीत्यासौ भारतं प्रतिन्यवर्तत। अनन्तरमसावफ्रीकादेशं गत्वा तत्र विंशतिं वर्षाणि न्यवसत्। तत्र भारतीयानामुपरि शासकवर्गैः क्रियमाणानत्याचारान् दृष्ट्वाऽयं करुणार्द्रोऽभवदकरोच्च विपुलं प्रयत्नं तानत्याचारान् निवारयितुम्। बहुशः सफलतामलभमानोऽप्यसौ स्वकीयात् प्रयत्नात् कर्तव्याच्च नैव व्यरमत्। अस्मिन्नेव

महाद्वीपे महात्मनाऽनेन सत्याग्रहस्य श्रीगणेशोऽकारि ।

आधुनिका विद्वांसोऽमुं गौतमबुद्धेन ईशुख्रीष्टेन च तुल्यं कथयन्ति । "अहिंसा परमो धर्मः" इत्येवास्य महात्मनः परमोपदेशः । "चर्मकाराः, श्वपचाः, म्लेच्छाः, यवनाः, आभीराः, कुलालाः, सर्वे एव परमात्मनोऽपत्यानि । अस्मात्कारणात् सर्वान् प्रति स्नेहः प्रदर्शनीयः, न कस्माच्चिदपि घृणा कार्या" इत्येवास्य शाश्वती शिक्षाऽसीत् । "सत्यमेव परमात्मा" "स्नेहः परमात्मनः स्वरूपम्" "परमात्मा स्नेहमयः" इत्येतं सिद्धान्तमसौ सर्वदाऽशिक्षयत् । अहिंसा-बलेन सत्याग्रहावलम्बनेन च तत्रभवान् भारतवर्षेभ्यः आङ्ग्लान् निस्सार्य देशमिमं स्वतंत्रमकरोत् । अस्माद्धेतोः भारतीया महात्मानमेनंराष्ट्रपितरं मन्यन्ते । "नाथूराम गोडसे" इतिनामधेयेन नराधमेन दिल्ल्याम् अष्टचत्वारिंशदधिकोनविंशतिशततमे ईशवीयेऽब्दे जनवरी-

मासस्य त्रिंशत्तम्यां तिथौ अस्य वधोऽकारि । परन्त्वसौ महात्मा पुण्येन स्वकर्मणामरो:जातः । वयमेनमीश्वरमिव पूजयामः ।

जीवन्तं मृतवन्मन्ये देहिनं धर्मवर्जितम् ।
मृतो धर्मेण संयुक्तो दीर्घजीवी न संशयः॥ १॥

पद्माकरं दिनकरो विकचीकरोति
चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहितेषु कृताभियोगाः ॥

स्वयं न खादन्ति फलानि वृक्षाः
पिबन्ति नाम्भः स्वयमेव नद्यः
धाराधरो वर्षति नात्महेतोः
परोपकाराय वभूतयः ॥

---

त्रयोविंशः पाठः

## पण्डितः जवाहरलाल नेहरूः

एकोनाशीत्यधिकाष्टादशशततमे ईशवीयेऽब्दे नवम्बरमासस्य चतुर्दश्यां तिथौ पुण्ये प्रयागनगरे भारतवर्षस्य प्रथमप्रधानामात्यस्य जवाहरलाल-नेहरूमहोदयस्य जन्माभूत्। अयं काश्मीरदेशीयो ब्राह्मणः। अस्य पिता मोतीलालनेहरूः एनं प्राणेभ्योऽप्यधिकतरममन्यत यतोऽयं तस्यैकाकी पुत्रः। इंगलैण्डदेशेऽसौ वद्यामधीतवान्। स्व विद्यालयेऽयं सर्वेषु छात्रेषु श्रेष्ठः। आङ्गलदेशादा-गत्य गान्धीमहात्मनो मतमवलम्ब्य उदाराशयोऽयं स्वदेशं स्वतंत्रं कर्तुं विपुलं प्रयत्नमकरोत्। आङ्ग्लदेशीयेभ्यो भारतभूमिं समुद्धर्तुं प्रयतमा-नोऽसावनेकशः कारागृहमसेवत। स्वगृहे विद्यमानं राजदुर्लभं सुखं त्यक्त्वा सुधीरयं भारतवर्षस्य कृते गौराङ्गैः प्रदत्तां महतीं यातनामसहत।

भारतवर्षस्य स्वतंत्रतायाः हेतोः यदहिंसात्मकं युद्धं समारभ्यत तस्मिन्ननेन निरुपमस्त्यागः

सम्प्रदर्शितः। भारतीयानां यूनां हृदये एनं प्रति महती प्रीतिर्विद्यते। स्वल्पे एव व्यस्यनेन विश्व-व्यापि यशो लब्धम् ,। जापान-जर्मनी-रूसामरी-काक्षीकाप्रभृतिदेशेषु स्वख्यातिं प्रतिष्ठाप्यासौ भारतवासिनां प्राणवल्लभो बभूव। भारतवासिनः एनम्प्रतिमहान्तं स्नेहं सम्मानंच दर्शयितुं वारत्रयममुं राष्ट्रपतिपदेन समलङ्कुर्वन्।

कमलानेहरूनामधेयेन नारीरत्नेन सार्धमस्य परिणयोऽभूत्। इन्दिरानाम्नीं कन्यां विहायास्य नान्यत् किमप्यपत्यम्। अयमत्यन्तं कुशलः राज-नीतिज्ञः, धीरः, वीरः, निर्भीकश्च। अनेकान् विदेशीयान् राजनीतिधुरीणान् स्वबुद्धिबलप्रभा-वेण समतिक्रान्तवान्। भारतवर्षे स्वतंत्रे संजाते भारतवासिनो महामनसमेनमेवप्रधानामात्यम-वृणवन्। साम्प्रतमयमेवास्माकं प्रधानामात्यो वर्तते।

एकेनापि सुपुत्रेण वद्यायुक्तेन साधुना।
आह्लादितं कुलं सर्वं यथा चन्द्रेण शर्वरी॥

चत्वारिंशः पाठः

## गंगा भागीरथी

भारतवर्षे कोऽपि जनो न भवेद् येन गङ्गा नाम न श्रुतं स्यात्। इयं भगवती भागीरथी हिन्दुलोकस्यास्ति परमपूज्या नदी। अस्यां नित्यं लोकः श्रद्धया भक्त्या च स्नाति, किन्तु पर्वसु सुदूरदूरादभ्यागत्य जनता गङ्गामवगाह्यात्मानं विगतकल्मषं मन्यते नयति च पवित्रं गंगोदकं स्वस्वगृहम्। पाश्चात्योऽपि "डाक्टर" लोको गङ्गाजले स्नानात्तस्य पानाच्च बहुलाभो भवतीति स्वीकरोति।

पर्वतराजाद्धिमवत इयं सुरसरिदुद्भवति। अस्या उद्गमस्थानं संप्रति गंगोत्तरीनाम्ना प्रसिद्धं लोके। पर्वतेभ्यो निर्गत्य हरिद्वारे समस्थले प्रवहति। प्रवहन्ती च पूर्वां दिशं गच्छति। अस्यास्तटे कनखलः, गढ़मुक्तेश्वरः, कर्णपुरं, प्रयागः। काशीत्यादि बहूनि नगराणि समृद्धान्यवस्थितानि। ततः पूर्वस्यां

# अथ व्याकरणम्

---

व्याकरणमस्मान् लेखनभाषणयोः शुद्धां रीतिं शिक्षयति। तत्र १ वर्णविचारः २ शब्दविचारः ३ वाक्यविचारश्चेत्ति त्रयो विषया भवन्ति

१ वर्णविचारेऽक्षराणामाकारः; उच्चारणं, उच्चारणस्थानादीनि च वर्ण्यन्ते।

१ शब्दविचारे शब्दभेदानां तथा व्युत्पत्तेश्च वर्णनं भवति।

३ वाक्यविचारे कारकपदसंयुक्ता क्रिया वाक्यं कथ्यते, तस्यैव रचनाप्रकारो भवति !

# ( १ ) अथ वर्णसमाम्नायः ( वर्णमाला ) ।

अ, इ, उ, ऋ, लृ, = ह्रस्वस्वराः
आ, ई, ऊ, ॠ, ए, ऐ, ओ, औ, = दीर्घस्वराः
} १ स्वराः अचः । } एते प्लुता अपि भवन्ति

क ख ग घ ङ = कु, कवर्गः ।
च छ ज झ ञ = चु, चवर्गः ।
ट ठ ड ढ ण = टु, टवर्गः ।
त थ द ध न = तु, तवर्गः ।
प फ ब भ म = पु, पवर्गः ।
} स्पर्शाः

य र ल व = अन्तःस्थाः ।
श ष स ह = ऊष्माणः ।
क्ष त्र ज्ञ = संयुक्ताक्षराणि ।
} २ व्यञ्जनानि, हलः

ः = विसर्ग = "स, र" स्थाने भवति ।
ं = अनुस्वार "न्, म्" स्थाने भवति ।
} अयोगवाहौ अनुस्वार-विसर्गौ स्वरात् परौ भवतः

} अक्षराणि, वर्णाः ।

ँ = अनुनासिकम् चन्द्रबिन्दुर्वा

---

१ एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः । स्वराणां ह्रस्वदीर्घप्लुतभेदाः । परस्परं सवर्णाः स्वयं राजन्ते इति स्वराः ।

२ अर्धमात्रिकं व्यञ्जनम् । स्वरसहायतां विना व्यञ्जनस्योच्चारणं नास्ति

(२) वर्णोच्चारणस्थानानि ।

अ, कु, ह[1], विसर्गाः = कंठ्याः—कण्ठः स्थानम् ।

इ, चु, य, शाः = तालव्याः—तालु स्थानम् ।

ऋ, टु, र, षाः = मूर्धन्याः—मूर्धा स्थानम् ।

ऌ, तु, ल, साः = दन्त्याः—दन्ताः स्थानम् ।

उ, पु, = ओष्ठ्यौ—ओष्ठः स्थानम् ।

ए, ऐ, = कण्ठतालव्यौ—कंठतालुस्थानम् ।

ओ, औ, = कंठोष्ठ्यौ—कंठोष्ठं स्थानम् ।

व = दन्तोष्ठ्यः—दन्तोष्ठं स्थानम् ।

———

१ पञ्चमवर्णयुक्तोन्तस्थसयुक्तश्च हकारः औरस्यः असंयुक्तः कण्ठ्यः ।

श्रीः

# सोदाहरणः स्वरसंधिः ।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | + | आ | = | आ, | यथा | शश | + | अङ्कः | = | शशाङ्कः । |
| अ | + | आ | = | आ, | यथा | रत्न | + | आकरः | = | रत्नाकरः । |
| आ | + | आ | = | आ, | यथा | दया | + | अर्णवः | = | दयार्णवः |
| आ | + | आ | = | आ, | यथा | विद्या | + | आलयः | = | विद्यालयः । |
| अ | + | इ | = | ए, | यथा | देव | + | इन्द्रः | = | देवेन्द्रः । |
| अ | + | ई | = | ए, | यथा | गण | + | ईशः | = | गणेशः । |
| अ | + | उ | = | ओ, | यथा | सूर्य | + | उदयः | = | सूर्योदयः । |
| अ | + | ऊ | = | ओ, | यथा | गृह | + | ऊर्ध्वम् | = | गृहोर्ध्वम् । |
| अ | + | ऋ | = | अर्, | यथा | देव | + | ऋषिः | = | देवर्षिः । |
| अ | + | ए | = | ऐ, | यदा | अद्य | + | एव | = | अद्यैव । |
| अ | + | ऐ | = | ऐ, | यथा | मत | + | ऐक्यम् | = | मतैक्यम् । |
| अ | + | ओ | = | औ, | यथा | जल | + | ओघः | = | जलौघः । |
| अ | + | औ | = | औ, | यथा | चित्त | + | औदार्यम् | = | चित्तौदार्यम् |

आकारस्याप्येवमेव सन्धयो भवन्ति

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| इ | + | अ | = | य, | यथा | कवि | + | अत्र | = | कव्यत्र । |
| इ | + | आ | = | या, | यथा | कवि | + | आगतः | = | कव्यागतः । |
| इ | + | इ | = | ई, | यथा | गिरि | + | इन्द्रः | = | गिरीन्द्रः । |
| इ | + | ई | = | ई, | यथा | क्षिति | + | ईशः | = | क्षितिशः । |
| इ | + | उ | = | यु, | यथा | कवि | + | उदयः | = | कव्युदयः । |
| इ | + | ऊ | = | यू, | यथा | प्रति | + | ऊहः | = | प्रत्यूहः । |
| इ | + | ऋ | = | यृ, | यथा | मुनि | + | ऋषभः | = | मुन्यृषभः । |
| इ | + | ए | = | ये, | यथा | प्रति | + | एकः | = | प्रत्येकः । |
| इ | + | ऐ | = | यै, | यथा | अति | + | ऐश्वर्यम् | = | अत्यैश्वर्यम् । |

इ + ओ = यो, यथा पचति + ओदनम् = पचत्योदनम् ।
इ + औ = यौ, यथा अति + औदार्यम् = अत्यौदार्यम् ।

ऋकारस्याप्येवमेव सन्धयो भवन्ति ।

उ + अ = व, यथा अनु + अगमत् = अन्वगमत् ।
उ + आ = वा, यथा सु + आसनम् = स्वासनम् ।
उ + इ = वि, यथा मधु + इदम् = मध्विदम् ।
उ + ई = वी, यथा साधु + ईहितम् = साध्वीहितम्
उ + उ = ऊ, यथा स्वादु + उदकम् = स्वादूदकम् ।
उ + ऊ = ऊ, यथा लघु + ऊर्मिः = लघूर्मिः ।
उ + ऋ = वृ, यथा मधु + ऋते = मध्वृते ।
उ + ए = वे, यथा अनु + एषणम् = अन्वेषणम् ।
उ + ऐ = वै, यथा अनु + ऐच्छिष्ट = अन्वैच्छिष्ट ।
उ + ओ = वो, यथा पचतु + ओदनम् = पचत्वोदनम् ।
उ + औ = वौ, यथा ददतु + औषधम् = ददत्वौषधम् ।

ऊकारस्याप्येवमेव सन्धयो भवन्ति ।

ऋ + अ = र, यथा पितृ + अनुमतिः = पित्रनुमतिः ।
ऋ + आ = रा, यथा पितृ + आदेशः = पित्रादेशः ।
ऋ + इ = रि, यथा पितृ + इच्छा = पित्रिच्छा ।
ऋ + ई = री, यथा पितृ + ईहितम् = पित्रीहितम् ।
ऋ + उ = रु, यथा पितृ + उपदेशः = पित्रुपदेशः ।
ऋ + ऊ = रू यथा पितृ + ऊढः = पित्रूढः ।
ऋ + ऋ = ॠ, यथा पितृ + ऋद्धिः = पितॄद्धिः ।
ऋ + ए = रे, यथा पितृ + एषणा = पित्रेषणा ।
ऋ + ऐ = रै, यथा पितृ + ऐश्वर्यम् = पित्रैश्वर्यम् ।
ऋ + ओ = रो, यथा पितृ + ओकः = पित्रोकः ।
ऋ + औ = रौ, यथा पितृ + औदार्यम् = पित्रौदार्यम् ।

ईकारस्याप्येवमेव सन्ध्यो भवन्ति

ए + अ = अय, यथा शे + अनम् = शयनम्
ए + आ = अया, यथा शे + आते = शयाते
ए + इ = अयि, यथा शे + इतः = शयितः
ए + ई = अयी, यथा शे + ईरन् = शयीरन्

उकारादिस्वरेषु परेष्वप्येवमेवायादेशो भवति

ऐ + अ = आय, यथा विनै + अकः = विनायकः
ऐ + आ = आया, यथा रै + आ = राया
ऐ + इ = आयि, यथा रै + इ = रायि
ऐ + ए = आये, यथा रै + ए = राये
ऐ + ओ = आयो, यथा रै + ओः = रायोः

अन्येषु स्वरेषु परेष्वप्येवमेवादेवाशो भवति।

ओ + अ = अव, यथा भो + अनम् = भवनम्
ओ + आ = अवा, यथा भो + आ = भवा
ओ + इ = अवि, यथा भो + इता = भविता
ओ + ए = आवे, यथा गो + ए = गवे

अन्येषु स्वरेषु परेष्वप्येवमेवावादेशो भवति।

औ + अ = आव, यथा पौ + अकः = पावकः
औ + आ = आवा यथा नौ + आ = नावा
औ + इ = आवि, यथा भो + इनी = भाविनी
औ + ई = आवी यथा भो + ई = भावी

अन्येषु स्वरेषु परेष्वप्येवमेवावादेशो भवति।

पदान्त ए+अ=एऽ, यथा कवे + अवेहि = कवेऽवेहि
" आ+आ=आऽ, यथा प्रभा +अनुगृहाण = प्रभाऽनुगृहाण

# सोदाहरणो व्यञ्जनसन्धिः

पदान्त क् + अ = ग, यथा दिक् + अन्तः = दिगन्तः
,, क् + आ = गा, यथा वाक् + आडम्बरः = वागाडम्बरः
अन्येषु स्वरेषु परेष्वेवमेव सन्धिर्भवति
पदान्त क् + ग = ग्ग, यथा दिक् + गजः = दिग्गजः
,, क् + घ = ग्घ, यथा दिक् + घनः = दिग्घनः
,, क् + ज = ग्ज, यथा दिक + जालम् = दिग्जालम्
,, क् + झ = ग्झ, यथा दिक् + झङ्कारः = दिग्झङ्कारः
,, क् + ड = ग्ड, यथा दिक् + डयते = दिग्डयते
,, क् + ढ = ग्ढ, यथा दिक् + ढौकते = दिग्ढौकते
,, क + द = ग्द, यथा वाक् + दानम् = वाग्दानम्
,, क् + ध = ग्ध, यथा दिक् + धनम् = दिग्धनम्
,, क् + न = ग्न, ङ्नयथा दिक + नागः = दिग्नागः, दिङ्नागः
,, क् + ब = ग्ब, यथा दिक् + बन्धनम् = दिग्बन्धनम्
,, क् + भ = ग्भ यथा दिक् + भागः = दिग्भागः
,, क् + म = ग्म, ङ्म यथा प्राक् + मुखः = प्राग्मुखः, प्राङ्मुखः
,, क् + मात्र = ङ्मात्र, यथा वाक् + मात्रम् = वाङ्मात्रम्
,, क् + मय = ङ्मय, यथा वाक् + मयम् = वाङ्मयम्
,, क् + य = ग्य, यथा धिक् + याचकम् = धिग्याचकम्
,, क् + र = ग्र, यथा दिक् + रोधः = दिग्रोधः
,, क् + ल = ग्ल, यथा धिक् + लोभिनम् = धिग्लोभिनम्
,, क् + व = ग्व, यथा सम्यक् + वद = सम्यग्वद
,, क् + श = क्छ, क्श, यथा वाक् + शक्तिः = वाक्छक्तिः,
वाक्शक्तिः

पदान्त क् + ह = ग्घ, ग्ह, यथा वाक् + हरिः = वाग्घरिः
वाग्हरिः
„ च् + अ = ज, यथा अच् + अन्तः = अजन्तः
„ च् + आ = जा यथा अच् + आदिः = अजादिः
„ च् + इ = जि, यथा अच् + इति = अजिति
अन्येषु स्वरेषु परेष्वेवमेव सन्धिर्भवति ।
„ च् + न = ज्न, ञ्ना, यथा अच् + नास्ति = अज्नास्ति,
अञ्नास्ति
„ च् + म = ज्म, ञ्म, यथा अच् + मध्यः = अज्मध्यः,
अञ्मध्यः
„ च् + व = ज्व, यथा अच् + वत् = अज्वत्
„ च् + न = च्न, यथा याच् + ना = याच्ना
„ ज् + न = ज्ञ, यथा यज् + नः = यज्ञः
पदान्त ट् + अ = ड, यथा मधुलिट् + अयम् = मधुलिडयम्
„ ट् + आ = डा, यथा मधुलिट् + आगतः =
मधुलिडागतः
„ ट् + इ = डि, यथा मधुलिट् + इह = मधुलिडिह
अन्येषु स्वरेषु परेष्वेवमेव सन्धिर्भवति ।
„ ट् + ग = ड्ग, यथा मधुलिट् + गच्छति =
मधुलिड्गच्छति
„ ट् + घ = ड्घ, यथा मधुलिट् + घटः = मधुलिडघटः
„ ट् + ज = ड्ज यथा मधुलिट् + जीवनम् =
मधुलिड्जीवनम्
„ ट् + झ = ढ्झ, यथा मधुलिट् + झनत्कारः =
मधुलिढ्झनत्कारः
„ ट् + ड = ड्ड, यथा मधुलिट् + डयते = मधुलिड्डयते
„ ट् + ढ = ड्ढ, यथा मधुलिट + ढौकते = मधुलिड्ढौकते

पदान्त ट् + द = ड्द यथा मधुलिट् + दारुः = मधुलिड्दारुः
" ट् + ध = ड्ध यथा मधुलिट् + धर्मः = मधुलिड्धर्मः
" ट् + न = ड्न,ण्न यथा मधुलिट्+ नर्दति मधुलिड्नर्दति,
मधुलिण्नर्दति
" ट् + ब = ड्ब, यथा मधुलिट् + बर्हिः + मधुलिड्बर्हिः
" ट् + भ = ड्भ, यथा मधुलिट् + भागः = मधुलिड्भागः
" ट् + म = ड्म, यथा मधुलिट् + मत्तः = मधुलिड्मत्तः
" ट्+मात्र=ण्मात्र, यथा मधुलिट् + मात्रम् = मधुलिण्मात्रम्
" ट् + व = ड्व, यथा परिव्राट् + वदति = परिव्राड्वदति
" ट् + य = ड्य, यथा परिव्राट् + याचना = परिव्राड्याचना
इत्यादि
" त् + अ = द, यथा जगत् + अन्तः = जगदन्तः
" त् + आ = दा, यथा जगत् + आदिः = जगदादिः

अन्येषु स्वरेषु परेष्वेवमेव सन्धिर्भवति।

" त् + ग = द्ग, यथा भवत् + गुरुः = भवद्गुरुः
" त् + घ = द्घ यथा भवत् + घातकाः = भवद्घातकाः
" त् + च = च्च, यथा महत् + चक्रम् = महच्चक्रम्
" त् + छ = च्छ, यथा महत् + छत्रम् = महच्छत्रम्
पदान्त त् + ज = ज्ज, यथा महत् + जीवनम् = महज्जीवनम्
" त् + झ = ज्झ, यथा महत् + झनत्कारः = महज्झनत्कारः
" त् + ट = ट्ट यथा महत् + टीका = महट्टीका
" त् + ठ = ट्ठ, यथा महत् + ठक्कुरः = महट्ठक्कुरः
पदान्त त् + ड = ड्ड, यथा महत् + डमरुः = महड्डमरुः
" त् + ढ = ड्ढ, यथा महत् + ढक्का = महड्ढक्का
" त् + द = द्द, यथा महत् + दारुः = महद्दारुः
" त् + ध = द्ध, यथा महत् + धर्मः = महद्धर्मः

पदान्त त+न=द्न, न्न, यथा भवत् + नमनम् = भवद्नमनम्
भवन्नमनम

„ त् + ब = द्ब, यथा भवत् + ब्राह्मः = भवद्ब्राह्मः

„ त् + भ = द्भ, यथा भवत् + भागः = भवद्भागः

„ त् + म = द्म, म्न यथा भवत् + मतम् = भवद्मतम्
भवन्मतम्

„ त् +मात्र= न्मात्र यथा चित् + मात्रम् = चिन्मात्रम्

„ त् + य = द्य यथा महत् + यानम् = महद्यानम्

„ त् + र = द्र, यथा महत् + रथः = महद्रथः

„ त् + ल = ल्ल, यथा महत् + ललाटम् = महल्ललाटम्

„ त् + व = द्व यथा महत् + वनम् = महद्वनम्

„ त् + श = च्छ, चश् यथा महत् + शकटम् = महच्छकटम्
महच्शकटम्

„ त् + ह = द्ध, त्ह यथा महत् + हसनम् = महद्धसनम्
मदत्हसनम्

„ द् + च = च्च यथा विपद् + चयः = विपच्चयः

„ द् + छ = च्छ, यथा एतद् + छाया = एतच्छाया

„ द् + ज = ज्ज, यथा विपद् + जालम् = विपज्जालम्

„ द् + झ = ज्झ, यथा तद् + झनत्कारः = तज्झनत्कारः

„ द् + श = द्श, च्छ यथा तद् + शरीरम् = तद्शरीरम्
तच्छरीरम्

„ द् + ह = द्ह, द्ध यथा विपद् + हेतुः = विपद्हेतुः
विपद्धेतुः

„ द् + ट = ट्ट, यथा तद् + टीक = तट्टीका

„ द् + ठ = ट्ठ, यथा एतद् + ठक्कुरः = एतट्ठक्कुरः

„ त् + ड = ड्ड यथा एतद् + डमरुः = एतड्डमरुः

द् + ढ = ड्ढ यथा एतद् + ढक्का = एतड्ढक्का

„ द् + ल = ल्ल, यथा एतद् + लीलोद्यानम् = एतल्लीलोद्यानम्

द्+न=द्न, न्न, यथा एतद् + नेत्रम्=एतद्नेत्रम्
एतन्नेत्रम्

द्+म=द्म, न्म, यथा एतद् + मुरारिः=एतद्मुरारिः
एतन्मुरारिः

न्+च=ञ्च, यथा महान्+चयः =महाञ्चयः
न्+ज=ञ्ज, यथा महान्+जयः =महाञ्जयः
न्+झ=ञ्झ, यथा महान्+झनत्कारः=महाञ्झनत्कारः
पदान्त न्+श=ञ्च्छ ञ्छ यथा धावन् +शशः =धावञ्च्छशः
धावञ्छशः

,, न्+ड=ण्ड, यथा महान् +डामरः =महाण्डामरः
,, न्+ढ=ण्ढ, यथा राजन् +ढौकसे =राजण्ढौकसे
,, न्+ल= ल्ल, यथा महान् +लाभः =महाँल्लाभः
,, अन्+आ=अन्ना, यथा धावन्+आगतः =धावन्नागतः
,, अन्+आ=आना, यथा महान्+आग्रहः =महानाग्रहः
पदान्त न्+च=ँश्च, यथा पश्यन्+चकितः =पश्यँश्चकितः
,, न्+छ=ँश्छ, यथा धावन्+छागः =धावँश्छागः
,, न्+ट=ँष्ट, यथा उद्यन्+टङ्कारः =उद्यँष्टङ्कारः
,, न्+ठ=ँष्ठ, यथा महान् +ठक्कुरः =महाँष्ठक्कुरः
,, न्+त=ँस्त, यथा महान्+तडागः =महाँस्तडागः
,, न्+थ=ँस्थ, यथा त्विपन्+थुत्कारः =त्विपँस्थुत्कारः
पदान्त न्+श=ंश, यथा दन् +शनम् =दंशनम्
,, न्+स=ंस, यथा मीमान्+सते =मीमांसते
,, न्+ह=ंह, यथा बृन् +हितम् =बृंहितम्
पदान्त प्+अ=ब, यथा अप् +अन्तः =अबन्तः
,, प+आ=बा, यथा अप् +आगतम् =अबागतम्
,, प+इ =बि, यथा अप् +इन्धनम् =अबिन्धनम्

## अन्येषु स्वरेषु परेष्वेवमेव सन्धिर्भवति

| | | | | | |
|---|---|---|---|---|---|
| पदान्त | प्+ग =ब्ग, | यथा | अप् | +गच्छति | =अब्गच्छति |
| ,, | प+घ =ब्घ | यथा | अप् | +घटः | =अब्घटः |
| ,, | प्+ज =ब्ज, | यथा | अप् | +जन् | =अब्जम् |
| ,, | प्+ड =ब्ड, | यथा | अप् | +डमरुः | =अब्डमरुः |
| ,, | प्+ढ =ब्ढ | यथा | अप् | +ढौकते | =अब्ढौकते |
| ,, | प्+द =ब्द, | यथा | अप् | +दानम् | =अब्दानम् |
| ,, | प्+भ =ब्भ, | यथा | अप् | +भक्षणम् | =अब्भक्षणम् |
| ,, | प्+व =ब्ब | यथा | अप् | +बासाः | =अब्बासाः |
| ,, | प्+म =म्म,ब्म, | यथा | अप् | +मानम् | =अम्मानम्<br>=अब्मानम् |
| ,, | प्+मय=म्मय, | यथा | अप् | +मयम् | =अम्मयम् |
| पदान्त | म्+य =ंय | यथा | सत्वरम् | +याति | =सत्वरं याति |
| ,, | म्+र =ं, | यथा | करुणम् | +रोदिति | =करुणं रोदिति |
| ,, | म्+ल =ंल, | यथा | विद्याम् | +लभते | =विद्यां लभते |
| ,, | म्+व =ंव, | यथा | भारम् | +वहते | =भारं वहते |
| ,, | म्+श =ंश, | यथा | शय्यायाम् | +शेते | =शय्यायां शेते |
| ,, | म्+स=ंस, | यथा | कष्टम् | +सहते | =कष्टं सहते |
| ,, | म्+ह=ंह, | यथा | मधुरम् | +हसति | =मधुरं हसति |
| ,, | म्+क=ंक, | यथा | किम् | +करोषि | =किङ्करोषि<br>किं करोषि |
| ,, | म्+च=ञ्च,ंच, | यथा | क्षिप्रम् | +चलति | =क्षिप्रञ्चलति<br>क्षिप्रं चलति |
| ,, | म्+त=न्त,ंत, | यथा | नदीम् | +तरति | =नदीन्तरति<br>नदीं तरति |
| ,, | म्+प=म्प,ंप, | यथा | चन्द्रम् | +पश्यति | =चन्द्रम्पश्यति<br>चन्द्रं पश्यति |

# सोदाहरणो विसर्गसंधिः

| | | | | | |
|---|---|---|---|---|---|
| अः | +अ | =ओऽ | यथा नवः | +अङ्कुरः | =नवोऽङ्कुरः |
| अः | +आ | =अ आ | यथा कुतः | +आगतः | =कुत अगातः |
| अः | +इ | =अ इ | यथा नरः | +इव | =नर इव |

अन्येषु स्वरेषु परेष्वेवमेव विसर्गलोपो भवति ।

| | | | | | |
|---|---|---|---|---|---|
| आः | +अ | =आ अ, | यथा अश्वाः | +अमी | =अश्वा अमी |
| आः | +इ | =आ इ, | यथा गजाः | +इमे | =गजा इमे |
| आः | +ग | =आ ग, | यथा हताः | +गजाः | =हता गजाः |
| आः | +ज | =आ ज, | यथा पुत्राः | +जाताः | =पुत्रा जाताः |
| आः | +ढ | =आ ढ, | यथा गजाः | +ढौकन्ते | =गजा ढौकन्ते |
| आः | +द | =आ द, | यथा निर्वाणाः | +दीपाः | =निर्वाणा दीपाः |
| आः | +भ | =आ भ, | यथा नराः | भीताः | =नरा भीताः |
| आः | +य | =आ य, | यथा नराः | +यतन्ते | =नरा यतन्ते |
| आः | +ह | =आह, | यथा बालकाः | +हसन्ति | =बालका हसन्ति |

इत्यादि ।

| | | | | | |
|---|---|---|---|---|---|
| इः | +अ | =इर, | यथा कविः | +अयम् | =कविरयम् |
| इः | +उ | =इरु, | यथा रविः | +उदेति | =रविरुदेति |
| ऊः | +ए | =ऊरे | यथा बधूः | +एषा | =बधूरेषा |

इत्यादि ।

| | | | | | |
|---|---|---|---|---|---|
| इः | +ग | =इर्ग, | यथा ऋषिः | +गच्छति | =ऋषिर्गच्छति |
| एः | +द | =एर्द, | यथा रवेः | +दर्शनम् | =रवेर्दर्शनम् |

इत्यादि ।

| | | | | | |
|---|---|---|---|---|---|
| अः | +र | =आर | यथा पितः | +रक्ष | =पितारक्ष |
| इः | +र | =ईर | यथा निः | +रसः | =नीरसः |

